# एकांकिनाट्यद्वयम्

(यौतकमुत्कोचश्च)

लेखक

**डा क्षेमचन्द**

एम० ए० (हिन्दी, संस्कृत)

पी-एच० डी० (संस्कृत)

**मूर्ति प्रकाशक**

शाहदरा, दिल्ली-३२

## समर्पण वाक्

सित पद्मासनां देवीं वसानां विमलाम्बरम् ।
कलहंसवाहनां नत्वा शारदां जाड्यहारिणीम् ।।

तेभ्य एतां कृतिं स्वीयामर्पये लघुमप्यहम् ।
द्रष्टुमिच्छन्ति ये नव्यान् विचारान् संस्कृतेऽधुना ।।

क्षेमचन्दः ।

# सम्मति

डा० क्षेमचन्द एम० ए० द्वारा विरचिते एकाङ्क नाटके यौतुकोत्कोचे अवलोकिते। लेखकेनाधुनिक नाट्य शास्त्राधारेण समाज सुधारमुद्दिष्यानयो सन्दृम्भणकृतम्। प्रसादगुणः वैदर्भी-रीतिश्चात्र विशेषतः प्रकाशेते। कथावस्तु तावत्कविकल्पित-मेवास्ति। अहमनयोर्नाटकयोः प्रकाशनेन सुरसरस्वती सहित्यस्य सर्वजन संवेद्यतां समाजहिताय प्रयोज्यतां च सम्भावयामि।

ह० अमीरचन्द शास्त्री
(साहित्याचार्य)
राष्ट्रपति से सम्मानित आचार्य
एम-22 कस्तूरबा अपार्टमेंटस
परवाना रोड, पीतमपुरा, सरस्वती विहार
ए ब्लाक, दिल्ली-110034

समाजे साम्प्रतं बहवः समस्या दृश्यन्ते, तासामाकलनं समाधानं च कविना कर्तव्यमेव। संस्कृतेऽमूदृश समस्या नाटकानां संख्या नातिभूयसी। लेखकेन डा० क्षेमचन्द्र शर्मणा लिखिते इमे एकाङ्क नाटकेएतस्य महतोऽभावस्य पूर्ति रिति नितरां सन्तुष्यति चेतः। लेखक आधुनिक समस्या जागरूकोऽन्यामपि कृतिमेतादृशीं दत्वा समाजं जागरयत्विति कामनयासहाहमस्यकृति द्वयस्य प्रचारप्रसारौ कामये।

ह० डा० हर्षनाथ मिश्रः
सी-12/379, यमुना बिहार,
दिल्ली-53

# भूमिका

भारतीयः समाजः साम्प्रतं बहुभिः कुत्सित प्रवृत्तिभिः पीडितो-दृश्यते। बहवः समस्या अत्र दिनानुदिनं सुरसा मुख व्यादानमिव वर्धमाना समाजं कवलयितुं प्रवृत्ता विलोक्यन्ते। ताः समस्याः केवलं विधिनिर्माणेन राजकीय दण्डभिया च न समाधेयाः। तासां समाधानाय लोकानां भावनायाः परिष्कारः प्राचीन संस्काराणां जागरैवापेक्ष्येते। भावनायाः उद्बोधनाय काव्यं विशेषतो लघुनाटकं च यथा सफलं साधनं भवति तथा नान्यदिति नाविदितं काव्य-मर्मज्ञानाम्। काव्यं हि कान्ता सम्मितमुपदेशं तथा प्रयच्छति यथा लोकानां हृदयं कुमार्गं स्वयं विहाय सन्मार्गमवलम्बते। सरसोपदेशकं काव्यं कुप्रवृत्ति समूलमुन्मूलयति, सुप्रवृत्ति च प्रतिष्ठापयति। तत्रापि नाटकं दृश्यत्वादधिकं प्रभावशालि भवति। अतएव काव्येषु नाटकं रम्यमित्युच्यते समीक्षकैः। इदं हि चतुर्भिराङ्गिक वाचिकाहार्य-सात्त्विकैरभिनयैः प्रतिपाद्यमुपदेशं सरसं सर्वतो भावेन स्वतोग्राह्यं विधाय हृदय देशे तथा स्थिरयति यथा स वज्रलेखायते तस्य च रेखा कदापि न तिरोहिता भवति। अतएव भरतमुनिनोच्यते "नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्"। भिन्न रुचयो मानवाः नाट्येन तथा समाराध्यन्ते यथा तत्र कर्त्तव्याकर्तव्य विवेक उदयते तेन च तेन जीवनमूल्यं विनिश्चिन्वन्ति तच्चात्मसात् कुर्वन्ति

तदनुसारेण-व्यवहरन्ति तेन च कीर्ति सदा स्थायिनीं प्रीतिं चानपायिनीं विन्दते। व्यक्तीनामेवंभूत पूताचरणानां समाजश्चकुप्रवृत्ति मुक्तः सुप्रवृत्तियुक्तः सन्नादर्शोभवति। तादृशं कुत्सित कार्यमेतादृशोपदेशः पवित्रहृद्देशः कदापि न करोति यस्मिन् तं प्रत्यन्येन कृते स दुःखमनुभवति। आत्मनः प्रतिकूलानि न परेषां समाचरेदित्युपदेशः सनातनस्तस्य मनसि प्रादुर्भवति।

व्यस्तता संभृतेऽस्मिन् युगे दीर्घ काल साध्य प्रेक्षणानां नाटकानां बहु काल पठन मनन परिशीलन सम्पाद्य रसानुभूति कान्तासम्मितोपदेशानां महाकाव्यादीनां च प्रसरावसरौ नस्त इति कृत्वा लघुकाव्यानि एकाङ्कि नाटकानि च लिख्यन्ते प्रायो लेखकैः। समाजस्योद् बोधनाय साम्प्रतमेवादृशं साहित्य निर्माणं परमावश्यकम्। यदा प्रति व्यक्ति स्वस्थं विचारं विन्देत् तदा व्यक्ति समष्टिरूपः समाज आदर्शोभवेत्। प्रति वृक्ष स्वास्थ्यं वनस्य स्वास्थ्यं भवत्येव।

अद्य समाजे यौतुकलोभस्तथा वर्धते स्म यथा कन्यापितृत्वं महत् कष्टमभवत्। अस्य सामाजिकरोगस्य चिकित्साशीघ्रं न क्रियेत् चेत् समाजोऽयं मा जीवन् भवेत्। सर्वे कन्यापितरः साम्प्रतं कन्यापत्यजन्मना स्वकीयं दौर्भाग्यं मन्यन्ते सकलाश्च सन्ति दुःखिताः। प्रथमे एकाङ्किनि नाटके यौतुकस्यसमर्थनाय दीयमानानां युक्त्याभासानां खण्डनं विधाय तस्य कुत्सा मया तथा विहिता यथा यौतुक ग्रहणं महत्पापमिव-लोकेस्त्याज्यत्वेन स्वीकृतं स्यात्। एतत् कृते यावद् वरः साहसं न कुर्यात् यावत् स सहधर्मिणीनां गुणेनाकृष्टो न भवेत् तावदियं कुप्रथा न नश्येत्। पुरोहिता यान् मन्त्रान् पाठयन्ति विवाहावसरे तैर्विवाहो न धन कृतः सम्बन्धः नवायं भौतिकः संयोगः किन्त्वाग्नि साक्षिकः आत्मिकः सम्बन्धः धार्मिकः संस्कारश्च सिद्धयति। अतएव पत्नी धर्मं पत्नीत्यच्यते तां विना कापि धार्मिको विधिर्न सफलो न

वा लोकयात्रा सफला, इत्येवं विधं महत्त्वं प्रख्यापनीयम् । अत्र च तथाविधस्यावगत विवाह महिम्नो युवकस्य प्रशस्यतमं कार्यं चित्रितमस्ति । सोऽत्र स्तुतः—

त्वद् विधा एव युवकाः प्रशस्याः योग्योऽपि भूत्वा निर्लोभचेतास्त्वमसि अतएव (त्वं) कलङ्क रहितोऽसि कज्ज्जलप्रकोष्ठे यथा सरसि पङ्कजं पङ्कनिर्लिप्तं भवत् सर्वस्मै स्पृहणीयं भवति तथा त्वमसि स्तुत्यः । एतेन एतादृश युवकवद् युवकैरस्माभिर्वर्तितव्यमिति कान्ता सम्मितोपदेशः युवकैः सहृदयैरवाप्यते ।

द्वितीयमेकाङ्किनाटकमुत्कोचं निन्दति । अत्रापि उत्कोच ग्रहण साधकाः सर्वे पक्षाभासाः खण्डिताः । इदं कार्यं समाजे प्रसृतं संक्रामक रोगस्येव शीघ्र निदानं चिकित्सांचापेक्षते । अत्र तन्निवारणोपायोऽपि दर्शितः । स चास्ति दण्डदापनरूपः पश्चात्ताप रूपः । इदानीमपि विवेको न सर्वथा विलुप्तः । सुसंस्कारः केवलं सुप्त इव जातः । तस्य जागराऽपेक्षिताऽस्ति । उत्कोचग्रहीता इव तस्य दाताऽपि दोष भागस्ति । यदि स सावधानो भूत्वा एतादृशान् कुप्रवृत्तिवतो दण्डयेत् अथवा तान् पश्चात्तापयितुं प्रवर्तयेत् तर्हि अस्य रोगस्योन्मूलनं न दुष्करमित्येष सन्देशो द्वितीयस्यैकाङ्किनो वर्तते । उत्कोच ग्रहीता धर्नसिंहः—

पश्चात्तपति—

"धिगिदं दुष्कर्मचारिणं माम्"।

स च प्राप्त सद् बुद्धिः वदति—

"उद्धृतोऽहं पतनाद् घोर नरके" ।

अतो दण्डदापकेन मम हितमेवाचरितम् ।

अयं "बन्धः प्रकारान्तरेण मम मोक्ष एव" एतेन विरोधः पतनेन, न पतितेनेत्यत्यपि अत्र निर्दिष्टम् । पश्चात्तापाश्रुक्षपित कल्मषोऽपराधी शुद्धः क्षम्य इति अत्रत्यः क्षमादानपरो न्यायोऽपि प्रशस्यः ।

सहस्त्ररूप्यक दण्डदान मुक्तः स कदापि उत्कोचं नादत्तवान् इति व्यङ्ग्यार्थोऽत्र परिस्फुटति तस्य पश्चात्ताप सम्पृक्तवचसेति । कथावस्तु पात्राणि स्थानादीनि च नाटकद्वये कल्पितानि सन्ति । भाषा शैली च मया प्रसाद गुण युक्ता प्रयुक्ता । येन विषय-वस्तु स्पष्टं समक्षं स्फुरेत् ।

यद्ययं प्रयासो लोकाय रोचेत् तदैव सफलः स्यात्सः । अनेन नाटक द्वयेन यदि समाजे सुभावनोदयेत् तदायं जनः सफलायासमात्मानं मन्येत् । अन्याऽपि कृतिरेतादृशीसमुद्भवेत् । अत्र कालिदास वाक्यं—

क्लेशः फलेन हि पुनर्नवतां विधत्ते इतिस्मरणार्हमस्ति ।

इति शिवम् ।

क्षेमचन्दः

# यौतुकम्

## पात्र-परिचयः

| क्रम-संख्या | पात्र नाम | सम्बन्धः |
|---|---|---|
| १. | सोम शर्मा | वरः पक्षीय हरि कृष्णस्य-पिता दिल्ली नगर्याः साकेत-निवासी । |
| २. | कृष्णा | हरि कृष्णस्य माता सोम शर्मणः च पत्नी । |
| ३. | रुद्रदेवः | सोमशर्मणः कनिष्ठः पुत्रः । |
| ४. | निर्मला | सोम शर्मणः पुत्री । |
| ५. | ईश्वर दत्तः | कन्या पक्षीय मयराष्ट्रीय । |
| ६. | नारायण दत्तः | कन्या पक्षीय दिल्ली नगर्याः वसन्त विहार निवासी । |
| ७. | सुशील कुमारः | युवकः दिल्ली-नगर्याः शंकर नगर-निवासी । |

(नापितः पुरोहितः अन्ये चापि पात्राणि ।

# यौतुकम्

(एकांकि नाट्यम्)

(प्रथम दृश्यम्)

स्थानम्—गृहम् ।                    समयः—मध्याह्न ।

सोम शर्मा—(समाचार पत्रे पठति)

श्रुत्वाऽपि तोदनं वध्वाः देह-दाहं च गर्हितम्,
कारावासोत्पीडनं च सोढ्वा वा मानहानिकम् ।
निर्लज्जाः न विरमन्ति,
विवाहे यौतुकं ग्रहणात् ।।

सोम शर्मा—प्रिये ! यौतिकी प्रथा तु अति निन्दनीया जाता । समाचार पत्रेऽपि प्रतिदिनं निन्द्यते । अद्यापि यौतुक-विषये लिखितमस्ति यत् इदं भ्रष्टं रूपं प्राचीन यौतिक प्रथायाः । इदं निर्लज्जतया याचितं धनं स्वीकृतमिति ।

कृष्णा—आर्य ! इदं धन निर्लज्जतया याचितमिति कथनं नोचितम् । पिताऽपि स्वपुत्राय शिक्षाप्रदाने भृशं धनं व्ययते । पालन-पोषणे-सेवा नियोजने च यद् धनं व्ययीकृतवान्, तदास्तां तावत् । यदि सेवारताय पुत्राय पिता कन्यापक्षमल्पमनल्पं धनं याचते

तद्किमनुचितम् ? समाचार पत्रे तु भयमुत्पादयितुमल्पीयसी वार्तां वहुलतया प्रदर्शयन्ति ।

**सोम शर्मा**—(किञ्चिदुद्वेगेन) कथं स्वीकरोषि एतदनुचितं धनमपि उचितमेव । पिता स्वपुत्रं पाठयति एतत्तस्य पुत्रं प्रति प्रथमावश्यकमेव कर्त्तव्यम् । सेवा-नियोजने यदि धनं ददाति तर्हि एतेनन्यस्य कुमार्गस्य जन्म जायते । मम विचारस्तु प्रत्येकं जनः लोभं परित्यज्य सुयोग्य कन्यया सह पुत्रस्य विवाहं कुर्यात् ।

**कृष्णा**—आर्य । भवद्विचार शक्तिस्तु प्राचीना । साम्प्रतमेषा न सर्वं मान्या भवानेववदतु यत्कोऽपि लघुस्तरीय जीवन-यापन नाभिलषति । सर्वेऽपि समाजे प्रतिष्ठां स्थापयितुं येन केन प्रकारेण धनमेकत्रीकरणाय यतन्ते । धनमेव प्रतिष्ठायाः मूल कारणम् । सर्वे गुणाः काञ्चनमाश्रयन्ति ।

**सोम शर्मा**—प्रिये । अद्यत्वे जनाः धनमेव प्रतिष्ठायाः मूल कारणं विज्ञाय प्रमाद्यन्ति । सद्व्यवहारं सुचरितञ्च बिस्मृत्य धनमेवानुधाबन्ति । कन्या पक्षीयाः वरपक्षस्य प्रतिष्ठामवलोक्यैवात्म शक्तिञ्च परीक्ष्य विशिष्टायाः विशिष्टेन सह सम्बन्ध-स्थापने यत्नं कुर्वन्ति । यौतुक-व्याजेन धनं याचित्वा ते समाजे चौर्यम्, उत्कोचं, तस्करताम्, अति लाभम् लोभादिकं च दुर्गुणान् समुत्पादयन्ति ।

**कृष्णा**—आर्य ! सम्प्रति भवादृशः जनाः समाजे उपहास योग्याः भवन्ति। ये आदर्शान् स्थापयन्ति । समयानुसारमेव प्रगतिशील पुरुषैः सहमिलित्वा जीवन-निर्वाहमपयुक्त

मिति चिन्तयामि । अहन्तु स्वपुत्रस्य विवाह-वाग्दान संस्कारे विंशति सहस्त्र रूप्यकाणि याचिष्ये । सुवस्तुजातं भवत्यतिरिक्तमेव ।

**सोम शर्मा—**

मा वादीः किमपि प्रिये ! त्वम,
अलं प्रदर्शितेन शुभ प्रसंगात्पूर्वम् ।
न जाने कि भविष्यति तत्काले,
सन्तापयति हि श्रेयो चिन्तितं पूर्वेण ॥

**किञ्च—**

यदि कोऽपि जनः पिशुनः सूचयेदिदं दण्ड नायकं गत्वा वन्धः स्यादस्माकं पिशुनाः सर्वत्र सन्त्येव ।

(पटाक्षेपो भवति)

## (द्वितीयं दृश्यम्)

स्थानम् — गृहम् । समयः—दशवादन कालः ।

सोमशर्मा—प्रिये ! अद्य अस्माकं हरिकृष्णस्य विवाह-सम्बन्धे वार्तां कर्तुं मयराष्ट्रात् आगमिष्यन्ति । श्रुतम्मया यत् कन्यायाः पिता विद्युद्विभागे मुख्याभियन्ताऽस्ति । कन्याऽपि सुरक्षा मन्त्रालये वरिष्ठ लिपिक पदे नियुक्तासा च विज्ञान वर्गं माश्रित्य स्नातक-परीक्षोत्तीर्णाऽस्ति । अस्माकं हरि-कृष्णोऽपि नगर निगमस्य गृह-कर निर्धारण विभागे कनिष्ठ लिपिक पदे कार्यं करोति । अतएवात्र किं विचार-णीयम् ? यदि ते सम्बन्ध-स्थापनाय कृतनिश्चयाः भवन्ति तर्हि वयमपि स्वीकरिष्यामः ।

कृष्णा—साधु आर्य ! साधु ! अयमति हर्षस्य विषयः अहमपिभव द्विचारेण सहमतोऽस्मि । तेषां सम्मानार्थं गृहेकिञ्चि-ल्लावणिकं मिष्टान्नं वा आनेयम् ।

सोमशर्मा—बे रुद्रदेवः ! अत्रागच्छ ! गृहाण इमानि दशरूप्यकाणि । आपणात् लावणिकं मिष्टान्नं चानय ।

रुद्रदेव—यथाऽऽज्ञपयति पितः । एषः गच्छामि ।

कृष्णा—विंशति सहस्त्र रूप्यकाणाँ याचने भवान् सहमतोऽस्ति ?

**सोमशर्मा**—याञ्चा न मे रोचते। तदप्यहं किमपि न वक्ष्यामि। यादृशं तादृशं वा यत्किमपि वक्तुमिच्छसि त्वमेववक्ष्यसि। (किञ्चित्कालानन्तरमेवागच्छति निर्मला कथयति च पितरंप्रति)

**निर्मला**—पितः! मयराष्ट्रातागताः त्रयः पुरुषाः द्वारेस्थिताः सन्ति।

**सोमशर्मा**—(सोद्वेगेन बहिर्गत्वा) आगच्छन्तु श्रीमन्तः आगच्छन्तु।

(अतिथि प्रकोष्ठमुद्दिश्य) अत्रोपविशन्तु भवन्तः।

[ते आसन्दिकासूपविशन्ति। रुद्रदेवोऽल्पाहारमानयति मञ्चेच स्थापयति।]

**ईश्वरदत्तः**—(अल्पाहारं प्राप्य सोम शर्माणम् पृच्छति) आर्य! भवत्पुत्रस्य कियती शैक्षिक योग्यता कस्मिन् विभागे च कार्यं करोति।

**सोम शर्मा**—मम पुत्र कला-स्नातक पदवीं प्राप्य गृहकर निर्धारण-विभागे राजकीय सेवां करोति।

**ईश्वरदत्त**—मम पुत्र्यपि विज्ञान स्नातिका सुरक्षा मन्त्रालये-वरिष्ठ-लिपिक पदे नियुक्ता राजकीय सेवायामस्ति। भवत्पुत्रेण सह विवाहं कर्तुमिच्छामि। सा सौम्याशुभ्रवर्णा आकृत्या चापि कमनीया अस्ति।

(एतस्मिन्नेव काले कृष्णा पाचनालयात् आगत्यातिथि प्रकोष्ठस्य द्वारे भित्तिमाश्रित्य तिष्ठति)

**सोमशर्मा**—साधूक्तम्महानु भावेन। वयं जीविकोपार्जिकया कन्यया सहैव स्वपुत्रस्य विवाहं कर्तुमभिलषामः।

कृष्णा—भवता सुष्ठु मन्त्रितम् । वयमेवमेव स्वीकुर्मः परं मय राष्ट्र मण्डलस्य परीक्षितदुर्गं नामोपनगरादेको महाशयः आगतः मास पूर्वम् । सम्बन्ध-करणे परमेच्छुकः वाग्दान संस्कारावसरेविंशति सहस्राणिरूप्यकाणि मूलरूपेण दातुमिच्छतिस्म परं तस्य पुत्री सेवारता नासीत् अतएव अस्माभिरेव स्वीकृतिर्नदत्ता ।

ईश्वरदत्तः—भवति ! मम पुत्री तु सेवारता तथापि विंशति सहस्राणि रूप्यकाणि प्रति भवतां सम्मोहः त्याज्यः । काऽपि सेवारता कन्या विवाहिता भूत्वा स्वयमेव पर्याप्तं यौतुकं भवति । साऽऽजीवनं श्वसुर गृहे धनमर्जित्वा दास्यति ।

कृष्णा—अस्माभिः सकृदेव स्पष्टीकृता स्वेच्छा, न तु पुनः पुनः कथनेऽस्माकं विश्वासः ।

ईश्वरदत्त—(सोम शर्माणम् प्रति) श्रीमन् ! भवद्भिः एतत् यथायथं न विचारितम् । अहन्तु याचनं जुगुप्से । बिना याचनेनैव यथा शक्ति अहं याचितात् धनादप्याधिकं दातुं शक्नोमिपरं याञ्चापरवशांय एकां कपर्दिकामपि दातुं नोत्सहे ।

(सोम शर्मा किमपि न प्रत्युत्तरन् अधो मुखस्तिष्ठति)

ईश्वरदत्तः—अहो ! विस्मय कारिणी मानव जातेः वृत्तिरियंयत् यौतुके लब्धं धनमन्ततो गत्वा सार्थकं न भवतीति जानन्नपि सारमेयस्य मुखे लग्नं नीरसमस्थीव यौतुक-ग्रहणं ते न परित्यजन्ति ।

ईश्वरदत्त—पुनः सोम शर्माणं संसूचय्य) आर्य ! भवतोऽप्येका कन्या । किं भवानपि तस्याः विवाहे याचितं यौतुकं दास्यति ? परमत्र भवद्दोष एव नास्ति । एषा तु सामान्या-प्रवृतिः संजाता । स्मरतु भवान् ।

याञ्चा न वरं इति भवता न ज्ञातम्,
मूलं हि भवत्यैतत् हीनतायाः ।
सम्प्राप्ते खल्वात्म प्रसङ्गे कोऽपि,
न जानति यद्भविष्यति किम् ?

(मय राष्ट्रीयाः त्रयः पुरुषाः निर्गच्छन्ति)

(पटाक्षेपो भवति)

## (तृतीयं-दृश्यम्)

स्थानम्—गृहम् । समय—सार्धंदशवादन कालः ।

(भोजनान्तेपरस्परं वार्तालापं कुर्वन्तौ कृष्णा सोम शर्माणौ)

सोम शर्मा—गत सप्ताहे मयराष्ट्रीयाःन्अस्मभ्यमति कुपिताः अभवन् । भवत्यापि तद्दिने लज्जाँ परित्यज्य याचन-सीमायाः वर्हिगता । तेषाम्मतं समीचीनमेवासीत् । राजकीय सेवारता कन्यायाः विषयेयौतुक-याचतन्तु सत्यतः नौचितम् ।

कृष्णा—(शिष्टाचारं विस्मृत्य आवेशेन) मया कि मनुचितं कृतम् ? अद्यतन महार्घतायाः काले सेवारताः योग्यवराः अति दुर्लभाः । कन्यापक्षीयाः स्वयमेव चिन्तयेयुः यत् महार्घतया सहैवराजकीय सेवारताः वराः अपि महार्घ्याः भूताः सन्ति त्वमनभिज्ञोऽसि । समाजः समयपरिवर्तनेन सह परिवर्तते । वस्तुतः वार्धक्ये स्खलिताते मतिः ।

सोम शर्मा—बहूक्तं त्वया । विरमाधुना । लोभाकृष्ट मानसा त्वं लोभदर्पणावृताभ्यां लोचनाभ्यां सर्वां वसुधां स्वर्णमण्डिता-मेव पश्यसि । अत्र न केवलं तव दोषः । नारीणां स्वभावः

एषः। नायं: नारीभ्य: द्रुह्यन्ति। सत्यमेवोक्तं केनापि बुद्धिजीविना—

"नारी-चरित्रं पुरुषस्य भाग्यं,
देवो न जानाति कुतो मनुष्य:।"

साम्प्रतमू नारी चरित्रं विचित्रतायाः पराकाष्ठांगतम्। मम विचारे तु—

"चरित्रञ्तु नारीणां प्रकृति सिद्धं विचित्रम्,
परिवर्तन शीलमिदं न भवति विश्वसनीयम्।
परम्म हृदाश्चर्यमस्ति तु नारी दुर्दशायाम्,
यन्नारीणां सन्ति रिपवः खलु नार्यस्तु॥

कृष्णा—(विनम्रतया) कथं रूष्यति ? अत्राहं कथं नारीभ्य: द्रुह्यामि ? भवानेव विचारयतु यत् काचिदपि माता योग्य पुत्राय योग्य वधूमेव कथं नेषिष्यति ? आधुनिक-समाजे सर्वेजनाः पुत्राय योग्य वधूं स्वस्मै च भृशं यौतुक ग्रहण-मेवोचितं मन्यन्ते। एकः भवानेवविरलः यो यौतुकग्रहणाय ईर्ष्यति। मानवो हि सामाजिक प्राणी। समाजे-प्रचलितां सामान्य प्रवृत्तिमनु कुर्वन्ति जनाः। अहं तु मन्ये यत् एषा स्वार्थं प्रवृतिः अस्ति तथापीयं न नवीनाऽपितु परम्परया-ऽऽगता प्राचीना। सर्वः स्वार्थं समीहते। इति प्राचीन-कथनम्।

सोम शर्मा—ते तर्कं शक्तिरपि विचित्रा। अहं त्वा कथं बोधयामि ? त्वत्कथनानुसारमेषा प्रवृतिः लोभिजनस्यैव भवति। लोभी पुरुषः नारी वा धर्मं न पालयति, किमधि-

केन पापं पुण्यं वा न गणयति। माता पुत्रायस्पृहयति। तवापि स्वपुत्रेऽधिकारः यथाभिलषसि तथैवाचर।

(सहसा स्मृत्वा)—अये! मया विस्मृतमिदं यत् अद्य नवदिल्लीस्थ वसन्त विहारात् आगमिष्यन्ति कन्या-पक्षीयाः। तेषाँ ह्यः सन्देशवाहकः मम कार्यालयमागतोऽभूत्।

(तत्क्षणमेव कश्चित् द्वारे शब्दं करोति)

सोम शर्मा तत्र गत्वा (वसन्त विहार-निवासिनः एव) त्रयः पुरूषान् पश्यति।

[ते सर्वे निर्दिष्ट स्थाने षूपविशन्ति]

**नारायणदत्त**—(जलपानं गृह्णन् सोमशर्माणं पृच्छति) भवतः पुत्रस्य विवाह-सम्बन्धे कीदृशोविचारः? अहं नारायण-दत्तो नाम ब्राह्मणः वसन्त विहार निवासी भवत्पुत्रस्य विवाह-सम्बन्धे वार्तां कर्तुमागतोऽस्मि। भवत्कार्यालयंह्यः मया प्रेषितः स पुरुषः। आहूयतां भवत्पुत्रः।

**सोम शर्मा**—भवतु प्रागेव विज्ञातम्मया। (स्वपुत्रं हरिकृष्णम् आह्वयति) हरिकृष्णः आगच्छति उपविशति च।)

**नारायणदत्तः**—(सम्यक् रूपेणावलोक्य) आर्यं सोमश र्मन्। अहं प्रीतोऽस्मि। मदीयः निश्चयः जातः मम तु पुत्री राजकीय सेवा प्राप्ता भवत्पुत्रोऽपि च: आयुर्विद्ययो समतां गतो वर्णा कृत्योः च कोऽपि कस्मात् न्यूनाधिको नास्ति।

सोम शर्मा—साधूक्तं भवता परं पुत्रस्य मातुः सहमतिः वाञ्छनीया।

नारायणदत्तः—वरं, अवश्यमेव वार्तां कुरु श्रीमत्या सह।

(सोमशर्मा स्वपत्नीं कृष्णां पृच्छति कृष्णा च कथयति "भवान् गच्छतु।" (अहमपि) एषा आगच्छामि—

कृष्णा—(नारायणदत्तस्य समक्षमागत्य कथयति,) श्रीमन्! कन्या पक्षीयाः वरपक्षस्य सामाजिकीं प्रतिष्टामवलोक्य कियत् धनं व्ययिष्यन्ते इति निर्णयं प्राक्कुर्वन्ति। भवानपि निर्णयतु यत् कियत् धनं मुद्रा रुपेण कियच्च सुवस्तु जातस्य क्रये वर यात्रायाः भोजन-प्रबन्धे च व्ययियिष्यसि?

(अत्र नारायणत्तः किं कर्त्तव्यविमूढ़ आसीत्। द्विध भावयोः द्विधापन्नोकिमपि निर्णयितुं न शक्योऽऽसीत्। प्रथमं स्व कन्यायै वरान्वेषणेऽति व्याकुलो भूतोऽऽसीत्। द्वितीयं योतुकरूपेण याचितं धनमपि दातुं समर्थोनासीत्। तस्य विचारे योग्य वरस्यान्वेषण दुखं याचित धनप्रदानादपि कठिनतरमासीत्।

नारायणदत्तः—(प्रकाशम्) भवति। अहं सामर्थ्याद् परमेव दास्यामि पुनः किं समयेन? तथापि कथय मुद्रारूपेण कियद् धनंदातव्यम्?

कृष्णा—विंशति सहस्त्र रूप्यकाणि मुद्रारूपेण केवलम्।अस्माकं केवलमेषः समयः। सुवस्तु जातस्य विषये तु यथाभिलषसि तथैव कुरू।

नारायण दत्तः—(आत्मगतम्) भृशमिदं याचितंधनम्।कुतोऽऽगमिष्यति धनमियत्। किं करोम्यत्राहम् यद्यैतं वरं न वृणोमि तर्हि

न जाने कति-दिनानां पश्चात् अन्य बरमन्वेष्टुं समर्थो भविष्यामि नापि वा च ।

नारायणदत्तः—(प्रकाशं सावेशेन) वरमहं स्वीकरोम्यैनं समयं परमिदं धनं सप्त पद्या पूर्वमेव वर यात्रायाः स्वागतावसरे दातुं शक्तो भविष्यामि ।

अद्य तु वाग्दान संस्कारे एकाधिक पंच शतं रूप्यकाणि प्रदास्यामि इयद्धनमेव च लग्नावसरे

कृष्णा—एवमेव भवतु परं समयस्य पूरणे भवानेव दृढ़ संकल्पो भवेत् । तत्कालात् पूर्वं वयं किमपि न कथयिष्यामः ।

नारायणदत्तः—(सहर्षम्) कृतार्थोऽस्मिभवद्भिः क्षिप्रमाहुयतां पुरोधाः (नारायणदत्तः पुरोहितेन यथा विधि वाग्दान संस्कारे देवार्चनमाद्यावश्यक कर्म कारयित्वा वराय दातुमेकाधिक पंचशतानि रूप्यकाणि पुरोहितायददाति पंचरूप्यकाणि च प्रति सदस्याय दत्वा सर्वान् सम्मानयति ।

(अन्ते नारायण दत्तः करवद्धवा नमस्करोति निर्गच्छति च)

(पटाक्षेपो भवति)

## (चतुर्थ-दृश्यम्)

स्थानम्—वसन्त विहारस्थ नारायणदत्तस्य गृहम्। समय—सायं साधं चतुर्वादन कालः।

नारायणदत्तः—(विस्मयेन स्वभार्यां वदति) वर यात्रायाः आगमनस्य समयो भूतः।विलम्बो भवति। सन्देहयति मे मनः।

भार्या—आर्य पुत्र, अलं चिन्तयाऽऽगमिष्यति वर-यात्राऽपि।

(क्षणानन्तरमेव नापितोऽऽगच्छति सूचयति च)

नापितः—स्वामिन्! वरयात्राऽऽगता समुदाय भवनं प्रति च गच्छति। कथं भवद्भिः विस्फोट नादः न श्रूयते? पश्य, पश्य! अग्निस्फुलिंगाः आकाशं प्रतिगच्छन्तः दृश्यन्ते।

नारायणदत्तः—(सहर्षम्) वरयात्राऽऽगतेति सुष्ठुं जातम्। (नापितं प्रति) झटिति जलपानं नय। अहमप्यैषागच्छामि।

(किञ्चित्कालानन्तरमेव नारायणदत्तः समुदाय भवनं गच्छति) सोमशर्मणे एकादश रूप्यकाणि दत्वा सम्मानयति प्रार्थयते च वरस्य स्वगतार्थं सज्जो भवितुम्।

(षटवादन काले वरस्य स्वगतार्थमागच्छति नारायणदतः पुरोहितेनान्ये चापि विशिष्ट सम्बन्धिभिश्च सह। यावत्पुरोहितेन पूजनं प्रारभ्यते तावदेव सोमशर्मा कथयति "विरमक्षणं यावत्।"

सोमशर्मा—(नारायणदत्तं प्रति) किं न स्मरसि वाग्दान संस्कार समयेकृत समय वचन मिति ?

नारायणदत्तः—स्मरामि श्रीमन् ! (अपमान भयात् कर्णे कथयति) मयाभृशं यत्नः कृतः एकत्री करणाय परमियद्धनम् एकत्र-यितुं सफलोनाभवम् । अधुना दश सहस्त्र रूप्यकाणि गृहाण शेषन्तु विवाहानन्तरं द्विरागमनस्य काले दास्यामि ।

सोमशर्मा—(भार्यया सुशिक्षितः प्रकाशं कथयति) नहि, नहि, अहन्तु न मन्ये । विंशति सहस्त्र रूप्यकाणि मे अधुनैव प्रयच्छ । समय-पूर्ति कालोऽयं समायातः । कोऽत्र मे दोषः ?

नारायणदत्तः—(अञ्जलिवद्धवा) सत्यमेव कथयन्ति श्रीमन्तः परं-विवशोऽस्मि । अद्य रक्ष मे प्रतिष्ठा माद्यतनीया मेऽपकीर्ति-यद्यस्ति किं मृत्युना ?

सोमशर्मा—अहं किमपि न श्रोतुमिच्छामि । देहि मां समयानुसारमेव रूप्यकाणि । पणमपि न त्यक्ष्यामि ।

नारायणदत्तः—श्रीमन् ! मम प्रतिष्ठा भवद्धस्तयोः (अश्रूणि विमुञ्चयन्) अहं भवच्चरणयोः पतामि (नतपृष्ठः सः स्वोष्णीषंतस्य चरणयोः स्थापयति ।)

सोमशर्मा—(क्रोधं प्रदर्शयन्) उष्णीषं पादेन ताड़यति कथयति च ईदृशमभिनयेन किम् ? मम पुत्रः रूप्यकाणि ग्रहणानन्तर-मेव सप्तपद्याः हेतोः गमिष्यतीति कर्णौ सज्जीकृत्य शृणु । (तस्मिन्नेव काले नारायणदत्तस्य दीनतापूर्णं दुर्दशामव-लोक्य सोमशर्मणः निष्ठुरतायाः निराकरणं विचिन्तयन्

चैकोयुवकः करूणाद्रचित्तः पितुराज्ञापितः च जन सम्म-र्दात् वहिरागत्यविज्ञापयति)

युवकः —भो भो ! महापुरुषाः ! अहं सुशील कुमारो जात्याब्राह्मणः, सत्यव्रतस्य पुत्रो राजकीय सेवोपलब्धः शंकर नगर निवासी च पितुराज्ञां प्राप्य यौतुक-निवारणे युवकानामावश्यक कर्त्तव्यमनुपालयन् प्रार्थये यदहं नारायणदत्तस्य कन्यया सह विवाहं कर्तुमिच्छामीति ।

(एतच्छ्रुत्वा किञ्चित्कालं यावत् निःशब्दता संजाता । सर्वे सुशील कुमारस्य साहसमवलोक्य विस्मिताः आसन् । ते चिन्तयन्ति स्म यदत्र किमुचितं किञ्चानुचितमिति ? केचन परस्पर अवलोकयन्तः एकोऽन्यस्योत्तरं प्रतीक्षमाणाः किमपि न कथयन्ति स्म केचन सुशील कुमारस्य साहसपूर्णं सुनिर्णयमनुशंसन्ति स्म । अन्ये सोम शर्मणः पक्षीयाः सुशीलकुमाराय ईर्ष्यन्ति स्म ।)

पुरोहितः—(निशब्दतां नाशयन्) आर्यं नारायणदत्तः शोभनमेव सुशील कुमारस्य कथनम् । ज्योतिष शास्त्रानुसारमेव शुभ ग्रह गणनाप्रसंगे तव कन्यया सह अस्य युवकस्य विवाहः श्रेष्ठः तिष्ठति । स्थितिरप्येतादृशीं सम्भूता । किमपिन विचारणीयम् । सर्वं प्रकारेण योग्योऽयं वरः वरयैनञ्च ।

नारायणदत्तः—(सुविचार्य सहसा) साधु साधु ! गुरूदेवः ! साम्प्रत-मेतदुचितमेव ।

(सम्यक् विचारितं नारायणदत्तेन सम्यक्·······इति कथयन्तः बहुजनाः अनुमोदयन्ति ।)

**नारायणदत्तः**—वत्स सुशीलकुमार ! सप्तपद्याः हेतोः आगच्छ ! (सोमशर्माणं प्रति च) महानुभावः ! त्वमपि स्वगृहं गच्छ। त्वयि प्रार्थितेऽपि तव पुत्रेण सह मम कन्यायाः विवाहः न भविष्यतीति मे निश्चयः । दैवात् रक्षितोऽहं सुशील कुमारेण। ईश्वरेण प्रेषितोऽयं देवपुरुषः यथास्य नाम तथैवा स्मिन् गुणाः सन्ति। भवत्कृतापमानं विस्मर्तुं न शक्यम्। विशेषतः भार्या-शिक्षया त्वामेतादृशीमवस्थां नीतः। स्वयमेव विचारय यत् कथं भविष्यति विवाहः तव पुत्र पुत्र्योः। धिक् त्वां धनलोलुपम्।

**सोमशर्मा**—(आत्मगतम्) लज्जावनत, विच्छाय वदनोऽति दुखितः च नारायणदत्ते न कथितमिदं वाक्यं "भार्याशिक्षया........ इत्यनेकशः स्मरन् किञ्चिदपि न ब्रुवन् च स्व गृहं प्रति रिक्तहस्तो गच्छति।

(तत्पश्चात् नारायणदत्तः स्वकन्यायाः विवाहः सुशील कुमारेण सहैव करोति प्रयच्छति च स्वेच्छया सुशील कुमाराय दशसहस्त्र रूप्यकाणि भृशं सुवस्तुजातञ्च।)

**नारायणदत्तः**—वत्स सुशील कुमारः ! आगच्छ ! (सुशील कुमारं वक्षसा परिरभ्य आलिंगति कथयति च)

चन्द्रोऽसि तमोऽन्विते समाजे,
रक्षिता मेऽक्षुण्ण मान हानिः।

सफलीकृतं जीवनं मे सुतायाः,
विफलीकृता दुर्बुद्धिर्धनेप्सितानाम् ।।

अपि च—

त्वद् विधा एव युवकाः प्रशस्याः,
योग्योऽपि भूत्वा निर्लोभचेताः।
कलंक रहितोऽसि कज्जल प्रकोष्ठे,
यथा सरसि पंकजं पंकजञ्च ॥

(अन्ते सुशील कुमारः श्वश्रवाः श्वशुरस्य च चरणान् स्पृशति)

स्वश्रूः श्वशुरश्च—

(हस्तौ प्रसार्य) दीर्घायु सुखी च भव।
बुद्धिः सदा तु सुतरां चकाशतु
आदित्यवद् भातु सदा प्रतापः।
कीर्तिस्तु ते भातु शरत्सुधेव,
राका रजन्यां विमला सुवृष्टा ॥

(सर्वे निष्क्रान्ताः)

(पटाक्षेपो भवति)

# उत्कोचः एकाङ्कि नाटकम्

## पात्र-परिचयः

| क्रम संख्या | पात्र-नाम | पदं सम्बन्धश्च |
|---|---|---|
| १. | रामधनः | आवेदकः विद्युत्तारक संयोजनाय। |
| २. | धर्नसिंहः | व्यवहारलिपिकः कञ्चन नगरस्य-विद्युत्-प्रदाय कार्यालयस्य। |
| ३. | वेदप्रकाशः | रामधनस्य प्रातिवेशिकः |
| ४. | सत्यव्रतः | कञ्चननगरस्य विद्युत्-प्रदाय-कार्यालयें सहायक अभियन्ता। |
| ५. | प्रकाशचन्द्रः | कार्यालयस्य अधीक्षकः। |
| ६. | रचना | धर्नसिंहस्य कनिष्ठा पुत्री। |
| ७. | कमला | धर्नसिंहस्य भार्या। |
| ८. | दयारामः | धर्नसिंहस्य प्रातिवेशिकः |
| ९. | बुद्धराजः | न्यायधीशस्य कार्यालयस्य-प्रधानलिपिकः |
| १०. | सच्चिदानन्द वसिष्ठः | न्यायधीशः। |
| ११. | सत्यजित् कुमारः | राजकीय अधिवक्ता। |

(पत्रपाहकः, राजपुरुषाः, आह्वायकः आदयः अन्ये-कर्मचारिणः।)

## (प्रथमं दृश्यम्)

स्थानम्—कञ्चन नगरस्य विद्युत् प्रदाय कार्यालयः

कालः—पूर्वाह्णः सपाददश वादन कालः।

रामधनः—(कार्यालये व्यवहार-लिपिकं वदति।) श्रीमन्नमस्ते।

धर्नसिंहः—(उपेक्षयावलोकयन्) नमस्ते। कथय, किमर्थम् आगतोऽसि ?

रामधनः—श्रीमन् ! स्व गृहे विद्युत्तारक संयोजनार्थमावेदितम्मया गतमासे।

धर्नसिंहः—तव किं नाम ?

रामधनः—श्रीमन् रामधनः इति मे नाम।

धर्नसिंहः—स्मरामि। तव गृहस्य संख्या द्वादशः सुभाष वीथिकायां शिवालयात् नातिदूरं वर्तते।

रामधनः—आम् श्रीमन् ! भवता सम्यक् आलोचितम्। परमधुना मम कार्यम्…।

धर्नसिंहः—नहि, अधुना व्यस्तोऽस्मि कार्याधिक्येन। पुनरागच्छ।

रामधनः—किम् अग्रिम सप्ताहे अस्मिन्नेव दिवसे ?

धर्नसिंहः—(क्रोधमुद्वहन्) नहि, मासस्य पश्चात् तथापि एतन्नप्रतिवचनम्।

रामधनः—(विनम्रतया) श्रीमन् ! अति रूग्णा भार्या मे। तस्याः परिचर्यायामत्यावश्यकमिदम्। शीघ्रमेव कृत्वाऽनुगृह्णातु-माम्।

धनसिंहः—किं न पश्यसि कार्यातिशयमिमम् ? मृत्योरप्यावकाशो नास्ति । सर्वे एव शीघ्रतां वाञ्छन्ति ।

(रामधनः किञ्चित्कालं तत्रैव तिष्ठति)

धनसिंहः—(भर्त्संयन्) अधुना कथं तिष्ठसि ? गच्छ, पुनरागच्छ। (भर्त्सितः रामधनः किमपि न ब्रुवन् कक्षात् वहिरागच्छत् मार्गे च स्वयमेवालपति ।)

(स्वगतम्) व्यवहार कुशलो नायं कार्यदक्षोऽपि नास्त्यसौ,
कालानुरूपो नैवासौ वाङ्निबद्धोऽपि वर्तते ।
सर्वकारेण संवीक्ष्य कं गुणं नैव ज्ञायते,
नियुक्तोऽत्र पदेऽयोग्यो योग्ये चैतादृशो नरः ॥

(प्राथमिक विद्यालयस्य समीपे प्राति वेशिकः वेद प्रकाशः स्वयमेवालापयन्तं रामधनं दृष्ट्वा पृच्छति ।)

वेदप्रकाशः—मित्रवर्य ! कुतः आगच्छसि ? कथं चिन्तितोदृश्यसे ?

रामधनः—विद्युत्प्रदाय कार्यालयमगच्छम् । नवगृहे विद्युत्तारकं संयोजन विषयेऽवगन्तुं यत् कदा ते विद्युत्तारकं सचिष्यन्ति, किन्तु तत्र गमनं व्यर्थमेव भूतम् ।

वेदप्रकाशः—अद्यत्वे व्यवहार-लिपिकः कोऽस्ति ? किं धनसिंहः अद्यापि तदासने उपविशति ?

रामधनः—आम्, भवता तस्य नाम कथं ज्ञातम् ?

वेदप्रकाशः—न तु केवलम्मया प्रत्युत सर्वे एव जानन्ति । स तु परमोत्कोचकः । तस्यैव कार्यं करोति यस्मात् उत्कोचं गृहणाति, अन्यथा सर्वं दिनं किमपि न कुर्वन् उपविशति ।

रामधनः—किं कथयति भवान् ? सः किमपि न कुर्वन्…… । सः माम् अकथयत् यत् कार्याधिक्येन सप्ताहस्य का कथा परम्मासमेकं यावत् तव कार्ये विलम्बः संभाव्यते ।

वेदप्रकाशः—सः कथयति केवलं न आचरति । प्राक्कार्य-सम्पादने विलम्बं करोति । तेन दुःखित आवेदकः मुहुर्मुहुः प्रार्थयते तदापि तत् कार्यं न सम्पाद्य उत्कोचं दातुं विवशी करोति । एवमेवोत्कोचं गृहीत्वा कार्यं साधयति ।

(इत्थं वार्तालापं कुर्वन्तौ तौ विद्यालयस्य प्रवेश द्वारस्थे-मञ्चके उपविशतः ।

रामधनः—किमर्थमुत्कोचमादत्ते । सः सर्वकारात् वेतनं न गृहणाति ? एतत्तु न शोभनम् ।

वेदप्रकाशः –किं शोभनं किञ्चाशोभनमिति कोऽपि न विचारयति । उत्कोच रोगस्तु आन्त्रव्रणः इव एकशते नवतिजनेषु वर्तते । असाध्यरोगोऽयम् ।

रामधनः—किमकथयः ? आन्त्रव्रणः इवासाध्यरोगः ।

वेदप्रकाशः -अथ किम् । केचन जनाः उत्कोचं बिना जीवितुं न पारयन्ति । केचनोत्कोचमेव वेतनस्याभिन्नांगं स्वीकुर्वन्ति । ते एवात्मप्रशंसकाः मासिक वेतनमधिकाधिकं वक्तुं समुत्सकाः उत्कोच रूपेण प्राप्तधनमपि वेतनेन सह संयोज्य कथयन्ति परिचित जनान् ।

रामधनः—उत्कोच रूपेण गृहीतमिदं धनमधमाधमम् कथमिदं श्रमार्जितेन धनेन सह योजयन्ति ? इदम्महदाश्चर्यं यत् ऋषि-मुनीनां पवित्र देश वासिनां हृदयेषु एवं विधः कुत्सित-विचारः जातः ।

**वेदप्रकाशः**—सत्यमेवोक्तं त्वया। भवद्विधाः विरलाः जनाः निकृष्ट-मिदं धनमिति मन्यन्ते परमुत्कोचकास्तु सर्वोत्कृष्टम्मत्वा-ऽऽजीविकायाः साधनं स्वीकृत्य चावश्यमेव गृह्णन्ति। कुत्सित विचारस्योत्पत्तिः कथं संजातेतिविषये त्वहमपि चकितः अहन्तुचिन्तयामि यत् अस्योत्पत्तिः आंगलीयानां शासन काले अभवत्।

**रामधनः**—कथम्भूता कुत्सित विचारोत्पत्तिः आंगलीयानां शासने ? तदाऽहं वयसः विंशे वर्षे आसम् अद्याप्यहं स्मरामि यत्सर्वे राजकर्मचारिणः सर्वकार भयभीताः कर्तव्य निष्ठ्या सुचारू रूपेण चं स्वं स्वं कार्यं कुर्वन्ति स्म कोऽपि कस्मै उत्कोच रूपेण भग्नां कर्पर्दिकामपि न ददाति स्म तत्काले शासन व्यवस्था स्वस्था कठोराचासीत् न्यायालयेषु निवेदिते विवादे शीघ्रमेव निर्णयोभवति स्म। अद्य तु अति विशिष्ट व्यक्ति सम्बद्धेषु विवादेषु सर्वं पूर्वमायोग विशेष-स्य स्थापना तत्पश्चात् आयोगस्य प्रतिवेदने पुनर्विचारः ततश्चापि वर्षं यावत् निर्णयो न भवति।

**वेदप्रकाशः**—भवता सम्यगेव भणितम्। प्रशासनिक सेवा-कार्यालयेषु कार्यं शिथिलतायाः मूलकारणं शासन-शैथिल्यमेवास्ति। कर्मचारिणोऽपि शासन व्यवस्थामवलोक्य कार्यं सम्पादने त्वरां शिथिलतां वा प्रदर्शयन्ति। वस्तुतः "यथा राजा तथा प्रजा" इति लोकोक्ति साम्प्रतं सार्थकी भूता। परमत्र केवलं शासनस्य दोषः नैव। केचन शीघ्रमेव कार्यं सम्पादने-च्छुकाः किञ्चिद्धनं बहुमूल्य वस्तु वा दत्वा कर्मचारिभिः स्वकार्याणि कारयन्ति। अतएव उत्कोचस्यादाने जना-

नामपि प्रेरणा शक्तिः वर्तते परमस्मात्परमैवैकं कारण मुत्कोचस्य जन्मनि ।

रामधनः—किं तत्कारणम् ?

वेदप्रकाशः—आंगल शासने उपहार प्रदानस्यैका प्रथा प्रचलिताऽऽसीत् । केचन महत्वाकाङ्क्षिणश्चाटुकाराः जनाः उपहारे रूप्यकाणि बहुमूल्य वस्तूनि चांगल शासकेभ्यः प्रयच्छन्ति स्म । यदा आंग्लीयशासकैः भारतवर्षे प्रशासनिक सेवाः प्रारब्धाः तदा कार्यालयेषु कर्मचारिणः उपहारस्य व्याजेन रूप्यकाणामुत्कोचं गृहीतुम्समारभन्त । अतएव कर्मचारिणः उत्कोचदातुः कार्यं सर्वं पूर्वं कुर्वन्ति स्म । सत्यमप्यैतत्—
"को न याति वशं लोके मुखे पिण्डेन पूरिते ।"

अन्योऽन्यमनुकरणेन उत्कोच ग्रहण-प्रवृत्तिः सामान्या जाता । साम्प्रतन्तु—

"रक्त लग्न मुख कुक्कुरः इव,
याचते धनं प्रति जनं प्रलोभी ।
काक चेष्टितस्य तस्य दृष्टिः,
पतति परद्रव्ये तु क्षणे क्षणे ।।

गतानुगतिको लोकोऽयमनुकरणमेवाभिलषति । अतएव परस्परमा दान-प्रदानेन कार्यं सम्पादनमेव कुरूतः द्वावपि पक्षौ क्रमेण च अभ्यस्तौ भवतः । केचिद् वदन्ति—

वेतने न दृश्यते समृद्धिरत्र सर्वदा ।
चन्द्रमा विलोक्यते पूर्णरूप एकदा ।। १

पूर्णरूपमीक्ष्यते ततस्तथा च क्षीयते ।
यथा कर्पादिकाऽपि तस्य वीक्षितं न शक्यते ।।२

कारणं किमस्ति मित्र उच्यते निशम्यताम् ।
विचिन्त्यतां रहस्यमत्र वर्ततेऽधिगम्यताम् ।। ३
वेतनं नरो ददाति दापयत उत्कोचम् ।
ईश्वरः, अतोऽस्ति तत्र वृद्धिर्नो संकोचम् ।।४
याति तत् प्रतिपलं वर्तते वृद्धिरत्र ।
प्रभुणा प्रदत्ते भावे स्वतो वृद्धिः सर्वत्र ।। ५
भगवत् प्रदापितं फलति तत् कामानाम् ।
पूर्तिफलं तच्चास्ति कल्प वृक्ष आरामाणाम् ।। ६

रामधनः—अहन्तूत्कोचस्योन्मूलनाय कृत संकल्पोऽस्मि । कार्यं यदि न भवति, न भवतु । अहम् उत्कोच ग्रहणे तं रंजित करौ धारयित्वा राज पुरुषैः निगडितं द्रष्टुमिच्छामि ।

वेदप्रकाशः—भवत्विचारस्तु प्रशस्यः । अनुमोदयाम्यहम् । भ्रष्टाचारोन्मूलन विभागे सत्यव्रत नामा मुख्याधिकारी अतीव सुशीलो न्याय प्रियः चास्ति । स तु न केवलम् उत्कोचाय ईर्ष्यंति, अपितु उत्कोच ग्रहणं ज्ञात्वा सम्बन्धितं कर्मचारिणं दण्डयति । अस्मिन् विषये तेन सह वार्तां करिष्यामि । आगच्छ ममगृहे श्वो दिवसावसाने । अधुना विलम्बो जातः । अतएव स्वं स्वं गृहं प्रतिगच्छावः ।

(इति उभौ निर्गच्छतः ।)

पटाक्षेपो भवति ।

## (द्वितीयं दृश्यम्)

स्थानम् – वेदप्रकाशस्य गृहम् ।      समयः--सायं सप्तवादन कालः

रामधनः—(वेदप्रकाशस्य गृहमागत्य तत्र चोपविष्टं वेदप्रकाशं दृष्ट्वा)मित्र ! नमस्ते भवन्निर्दिष्ट समयानुसारमेवागतोऽस्मि ।

वेदप्रकाशः—मित्र ! आगच्छ ! अत्रोपविश ! सम्यगेव कृतम् । मयाऽपि तद्विषये मन्त्रितं सत्यव्रतेन सह । सोऽपि भ्रष्टाचरणोन्मूलने सुविचारितां योजनां श्रुत्वाऽतिप्रसन्नोऽभवत् । सत्यतः सः हृदयेन न्यायप्रियः, लोभरहित उत्कोच विरोधी चास्ति । तेन मयां सह प्रतिज्ञातमेवंकर्तुम् ।

रामधनः—कीदृशं प्रतिवचनं दत्तम् ?

वेदप्रकाशः—तेन प्रतिज्ञातमिदं यत् धर्नसिहस्य रञ्जितकरधारणे सहायको भविष्यति । भवत्कृत पूर्वयोजनानुसारमेव ।

रामधनः—किं कर्तव्यं पूर्वयोजना चरितार्थाय ?

वेदप्रकाशः—धर्नसिहाय कतिपयानि रूप्यकाणि त्वया प्रदातव्यानि । निश्चिते दिने यावत्त्वं रूप्यकाणि दास्यसि तावदेव सत्यव्रत महोदयेन सहाहमुपस्थितो भविष्यामि । तत्पश्चात् श्री सत्यव्रतः रञ्जितकरधारणस्यावश्यक प्रक्रियां पालयिष्यतीति ।

रामधनः—परमहं कथं दास्यामि उत्कोच रूप्यकाणि ? मया कस्मै कदापि उत्कोचो न दत्तः ।

**वेदप्रकाशः**—त्वया पुनः तस्य पुरतः भार्यारुग्णता व्याजेन विद्युत्तारक संयोजनस्य समस्या स्थापनीया युगपदेव च कथनीयं यत् ममयोग्याऽपि काचित्सेवा वर्तते ? अनेन कथनेन प्रेरितः सः किञ्चिदवश्यमेव ग्रहीतुमेषिष्यति । यावद्धनं स याचते त्वया स्वीकर्तव्यम् मह्यमपि चावेदनीयम् । एवमुक्तोऽहमपि निवेदयिष्यामि श्रीसत्यव्रताय ।

**रामधनः**—भवता सम्यक् मन्त्रितमेवमेव करिष्यामि ।

**रामधनः**—(द्वितीयेऽहनि कार्यालयं गत्वा परिदेवयन् च) श्रीमन्न-मस्ते । भवन्निश्चितकालात् पूर्वमेवागतोऽस्मि । ममभार्या रोगनिग्रहे विद्युतः ऋतेऽन्यच्छरणं नास्ति । अत्र किं करोमि ? अधुना भवत्कृपां विना न भविष्यति अस्याः निदानम् । श्रीमतां काचित्सेवा मया कर्तव्या ? (काचित्-सेवा सम्पादनस्य कथनं श्रुत्वा मनसि हर्षविशेषमनुभूय प्रसन्न मुद्रायां कथयति ।)

**धर्नासिह**—आये ! रामधनः । आगतोऽसि ? इत्युचितमेव कृतम् । विद्युदभावे परमदुःखितः लक्ष्यसे । विद्युत्प्रदानस्य हेतोः कियद्धनं दास्यसि ? यावन्ति रूप्यकाणि दातुमिच्छसि, देहि, सर्वपूर्वं भवतः कार्यमेव करोमि ।

**रामधनः**—स्वयमेव कथयन्तु श्रीमन्तः । अहं किं कथयामि ?

**धर्नासिह**—न्यूनातिन्यूनं त्रीणि शतानि रूप्यकाणि ।…… कदाचित् भवद्विचारे इयद्धनमत्याधिकं स्यात् परं ज्ञातव्यं यत् लिपिकपदात् प्रभृति अभियन्तुः सहायक अधिशासि-पदानि यावत् विभागस्यमिदं धनमिति ।

रामधनः—शतत्रयमेव दास्यामि परं सप्ताहानन्तरमस्मिन्नेव काले-दिवसे च।

धर्नसिह —भवतु, अहं प्रतिपालयिष्यामि त्वाम्। (रामधनः हर्षितमनाः धर्नसिहं नमस्कृत्य कार्यालयात् वहिरागच्छति। ततः सर्वप्रथमं वेद प्रकाशस्य गृहं गच्छति। (तौ परस्परमा लपयतः)

रामधनः—मित्र वेदप्रकाशः। भवन्निर्देशनमतीव युक्तमासीत्। तदनुसारमेवाचरितम्मया। स तु त्रीणि शतानि रूप्यकाणि ग्रहीतुमग्रिमे सोमवासरे सार्धदशवादन काले प्रतिपालयिष्यति माम्।

तेन तु विचित्राभिनयं कृतम्—

भवच्छिक्षितोऽहं कृतवान् तथैव,
तेन च तथैव कृत्वा प्रसादीकृतोऽहम्।
अभ्यस्तो भूत्वाऽप्युत्कोच ग्रहणे,
प्रदर्शितवानात्मनीनं नवत्वम्॥ १॥

वेदप्रकाशः—उत्कोचकाः एवमेव कुर्वन्ति। प्रथमे ते समस्यामुत्पादयन्ति तत्पश्चात् तस्याः समाधाने उत्कोचं ग्रहीत्वापि सत्पुरुषाणां भूमिकां निर्वहन्ति। अद्य तु रविवासरः, अहं सत्यव्रताय वृतान्तमिदं कथयामि येन सोऽपि यथाकालं विद्युत्-कार्यालयं गन्तुं सज्जो भविष्यति।······अये। स्मृतोऽहम्। उत्कोचरूपेण दातव्यानां रूप्यकाणां क्रमाङ्कान् एकस्मिन् पत्रखण्डे लिखामि।

रामधनः—किमर्थम्? मामपि कथय।

**वेदप्रकाशः**—शृणु ! सम्भवत आवयोः तत्र गमने विलम्बो भवेत् भवानपि आवां तत्र न दृष्ट्वा बहिगतः स्यात् तर्हि भवतो ऽनुपस्थित्यां तस्य बन्धः कथं भविष्यति ? अतएव तस्य बन्धनस्य हेतोः पूर्वमेव स विकल्पोमयाऽऽलोचितः। त्वं न जानासि। (कर्णे शनैः शनैः कथयति।)……भवद्दत्तानां रूप्यकाणामङ्कैः सह पत्रखण्डे लिखितानङ्कान् अन्य कर्मचारिणां समक्षे संमिल्य तेषां साक्ष्यरूपेण लिखित प्रतिवेदने हस्ताक्षराणि ग्रहीत्वा तं सफलतया बद्धुं समर्थौ भविष्यामि।

**रामधनः**—साधु ! मित्र ! साधु ! त्वं न केवलं योजना सम्पादने प्रवीणोऽपितु तस्याः क्रियान्वयनेऽपि परम कुशलोऽसि।

**वेदप्रकाशः**—मित्रवर्यः ! त्वया न विस्मर्तव्यमेतत्। श्वः यथाकालं तत्र गत्वा योजनानुसारमेव तत्सर्वं कर्तव्यम्।

**रामधनः**—किं कथयति भवानपि। एतन्मदीयं कार्यं वर्तते। अहमेव कथं विस्मरिष्यामि ? सुनिश्चितमिदम्।

(अपरेद्युः रामधनः तान्येव त्रीणि शतानि रूप्यकाणि ग्रहीत्वा विद्युत् कार्यालयं गच्छति)

**रामधनः**—(धर्नासिहं प्रति) श्रीमन्नमस्ते।

**धर्नासिह**—(सस्नेहं दृष्ट्वा) अये ! नमस्ते ! आगच्छ, आगच्छ, अत्रोपविश (आसन्दिकां प्रति संकेतयति रामधनः उपविशति।)

**धर्नासिह**—(सर्वतोऽवलोक्य, शनैः शनैः कथयति रामधनम्।) मञ्चस्याधस्तात् देहि मे रूप्यकाणि।

**रामधनः**—(स्वीकृति संकेतं प्रयच्छन् शिरः सञ्चालयति कथयति च।) आम्, अधुनैव दास्यामि। (पुनश्च घण्टामवलोक्य आत्मगतम् च) अधुना तु सपाददशवादन कालः पञ्चदश-कलाःअवशिष्टाः। यावत्तौ न आगच्छतः तावत् बार्त्तालापे तत्परौ भवावः।) (प्रकाशम्) महोदयः। कियद्दूरं गतोऽसि मे कार्यसम्पादने ? अहन्तु सज्जीभूयागतोऽस्मि।

**धर्नसिंहः**—अलं चिन्तया। शक्ति सदन कार्यालयात् ते विद्युत्तारक संयोजन पञ्जिकाऽऽगताऽस्ति। तस्यां स्वीकृतिरपि दत्ता। (इति कथयित्वा पञ्जिका मण्डलात् तामेव पञ्जिकां ग्रहीत्वा रामधनस्य पुरतः स्थापयति, स्वीकृत्याः आदेश-मपि दर्शयति। रामधनः पुनः घण्टामवलोकयति। सार्ध-दशवादनस्य कालः जातः।)

(रामधनः यावत् रुप्यकाणि प्रयच्छति तावदेव वेदप्रकाशः सत्यव्रतेन सह आगच्छति। सत्यव्रतः धर्नसिंहस्य हस्ते तानि रूप्यकाणि दृष्ट्वा सर्वं बृत्तान्तं वेदयति पृच्छति धर्नसिंहं च।)

**सत्यव्रतः**—कुत आगतान्येतानि रूप्यकाणि ? उत्कोचं केन दत्तानि ?

**धर्नसिंहः**—(विच्छाय पलित वदनो नतशिराः, निश्चेष्टितः कम्पमान हस्तश्चासौ किंचिद् वक्तुमिच्छन्नपि किमपि न कथयति। तेन मौनेनैव कृतापराधस्य स्वीकृतिः दत्ताः।)

**सत्यव्रतः**—(तत्क्षणे रामधनं प्रति) किं त्वया दत्तानि रुप्यकाणि धर्नसिंहाय ?

**रामधनः**—अहं······(इति कथनात् विरमति।) पुनश्च शिरः सञ्चाल्य स्वीकरोति।

**सत्यव्रतः**—(धनसिंहं प्रति) तव विषये मया पूर्वमेव एतादृशी उत्कोच ग्रहणसम्बद्धा सूचनानेकशः प्राप्ताः परं प्रमाणहीनोऽहम् किमपि कर्तुं शक्यो नासम्। उत्कोच ग्रहणे तव स्वभावः परिपक्वः जातः अतएव स्वभावजनिता प्रकृतिः केनापि न त्यज्यते। अद्य सत्यव्रतस्य सत्यकर्मनिष्ठायाः वागुरायां पतितोऽसि अतः मोक्षो न भविष्यति। (सत्यव्रतस्य कथितान् उच्चैः शब्दान् श्रुत्वा अन्ये चापि कर्मचारिणः तत्रागच्छन्। "भ्रष्टाचारोन्मूलन अधिकारिणः आगताः सन्ति।" इति केनचित् कर्मचारिणा श्रुत्वाऽऽगच्छति तत्रैव अधीक्षकः प्रकाशचंद्रः।)

**प्रकाशचन्द्रः**—(तत्रागत्य भ्रष्टाचारोन्मूलनस्य मुख्याधिकारी सत्यव्रतमवलोक्य च विस्मितः कथयति।) श्रीमन्नमस्ते।

**सत्यव्रतः**—(शिरः सञ्चाल्य नमस्कारं स्वीकरोति) आगच्छतु भवानपि। भवत्कार्यालये विद्युत्तारक संयोजनस्य व्यवहारिक लिपिकेन धनसिंहेन रामधनात् उपभोक्तुः रुप्यक शत त्रय रुप उत्कोचः गृहीतः।

(विस्मयेन विस्फारितः नेत्राभ्यां वीक्षमाणः पुनश्च) भवतोऽधीक्षणेऽपि एवंविधस्य कुमार्गस्य जन्म कथं जातम्?

**प्रकाशचन्द्रः**—सत्यतः अप्रत्याशितमिदम्। ]लज्जावनतमुखः पुनश्च ससम्भ्रमेण कथयति।) आगच्छन्तु श्रीमन्तः आसनं गृह्णन्तु च। (इति आसन्दिकां प्रति संकेतयति।

**सन्यव्रःत**—धनसिंहाय कथमिदमप्रत्याशितम्? उत्कोचग्रहणे परमप्रवीणोऽयम्। अद्य तु भवता दृष्टमत्र प्रत्यक्षे किं प्रमाणम्?

**प्रकाशचन्द्रः**—अग्रोपविशन्तु भवन्तः, उपविशन्तु !

**सत्यव्रतः**—किमनेनानुनय-विनयेन ? अहंमितः पदमेकमपि न गमिष्यामि। सर्वंपूर्वं प्रतिवेदनं लेखिष्यामि। भवानपि अत्रैव तिष्ठतु तावत्। प्रतिवेदने साक्षिरुपेण भवतः हस्ताक्षरस्य महती आवश्यकता।

(मुख्याधिकारी सत्यव्रतः प्रतिवेदनं लिखति। श्रीमतो सत्यव्रतस्यादेशमनुपालयन्तः अधीक्षकः प्रकाशचन्द्रः अन्ये चापि कर्मचारिणः प्रतिवेदने हस्ताक्षराणि कुर्वन्ति। ततः प्रतिवेदनेन सह स्वहस्ताक्षरितानि तानि रुप्यकाणि संलग्नी करोति सः।……तत्क्षणे निस्तब्धता समुत्पन्ना। केचन मनसा धर्नसिंहस्य रक्षणे किमपि वक्तुमिच्छन्ति स्म। परं वाचा कथयितुं नोत्सहन्ते। केचन चिन्तयन्ति स्म यत् रञ्जितकरधृतस्य रक्षार्थं किमपि कथनं श्रेयस्करं नास्ति। अन्ये परस्परमालपयन्तः कथयन्ति स्म यतत्र किं कुर्मः यो यद्वपति तदेव लभते।)

**सत्यव्रतः**—(सर्वान् कर्मचारिणः प्रति) धन्यवादाः भवद्भ्यः प्रतिवेदने साक्षि रूपेण हस्ताक्षराणां हेतोः। (सर्वेऽवनतमुखाः तिष्ठन्ति। सत्यव्रतः कार्यालयात् निर्गच्छति। तत्पश्चात् रामधन वेदप्रकाशौ वर्हिगच्छतः।)

**रामधनः**—मार्गे प्रसन्नचितः विजयगर्वोन्नतकन्धरः वेदप्रकाशं कथयति।) मित्रवर्य ! भवतः सहयोगः प्रशस्यतमः। भवता मेऽभिलाषा सफली कृता।

**वेदप्रकाशः**—नहि, नहि किं कृतज्ञताप्रदर्शनेन ? एकस्मिन्नेव कार्ये सहयोगस्यः प्राप्तिः विचार सादृश्येन संभवति। अहन्तु तव गृहे विद्युत्तारक संयोजनविषये चिन्तितोऽस्मि यत् कुपिताः ते शीघ्रमेव न करिष्यन्ति।

रामधनः—अलं चिन्तया। सुकृत्येनानेन भयभीताः मम कार्यं प्राथमिकतया सह शीघ्रमेव करिष्यन्ति।

वेदप्रकाशः—भवता यथायथमेवोक्तम्। वस्तुतः ते सर्वे सत्यव्रतस्य समक्षे त्रस्तमनसः किमपि नावदन्।

रामधनः—न ज्ञायते, अग्रे अग्रे सत्यव्रतः महोदयः प्रतिवचनस्य पालने कियत्सत्यनिष्ठो भविष्यति ?

वेदप्रकाशः—किं कथयसि ? स तु मया परीक्षितः, प्रतिवचन पालने दृढ़ संकल्पितोऽस्ति। तस्योपरि मे पूर्णविश्वासः।

रामधनः—यद्येवं तर्हि शोभनमेव। अधुना गच्छावः। (परस्परं नमस्कुरूतः गच्छतः च।)

(कार्यालयस्य अन्येऽपि कर्मचारिणः सत्यव्रतेन धनसिंहः आकस्मिक रूपेण रञ्जित करधृतेन विस्मिताः संत्रस्ताः च स्वस्वासन्दिकासूपविष्टाः सन्ति।)

धनसिंहः—(मस्तके हस्तं संस्थाप्य विचिन्तयन्, (आत्मगतम्) रामधनेन मया सह विश्वासघातः कृतः। रामधन वेदप्रकाशाभ्यां पूर्वनियोजित आसीत् कार्यक्रमोऽयम् इति मे पूर्णनिश्चयः।

अन्यथा मया तु—

"प्रयुक्ता मया प्रक्रिया सुसेविता सा,
कथमागताऽऽपदियमभूतपूर्वा ।

उत्कोच—लोभेन नष्टा मतिर्मे,
लोभो हि मूलं किल पातकानाम् ॥



(पटाक्षेपो भवति।)

## तृतीयं दृश्यम्

**समय**—द्वादश वादन कालः।   **स्थानम्**—विद्युत्प्रदाय कार्यालयः

**पत्रवाहकः**—(कार्यालये प्रविशति यच्छति च प्रकाशचन्द्रायैकं पञ्जीकृतं पत्रम्। पत्रविवरण पञ्जि कायाः एकस्मिन् स्थाने प्रकाशचन्द्रस्य हस्ताक्षरं कारयति।)

**प्रकाशचन्द्रः**—(तत्पत्रमनावृत्य पठित्वा च) श्री धर्नसिंह! अत्रागच्छ!

**धर्नसिंहः**—(तथानुष्ठिते) आम् श्रीमन्! उपस्थितोऽस्मि।

**प्रकाशचन्द्रः**—(चिन्तितः इव) उपविश, सत्यव्रतेन यदभिलषितं तदेव कृतम्। तस्य प्रतिवेदनामनुसारमेव महाप्रबन्धकेन प्रेषितोऽयं भवतोनिलम्बनादेशः। अयमादेशः सम्प्रेषणस्य तिथेः प्रभावी भविष्यति इतिविशेषरूपेणलिखितम्। अतएवादेशस्य प्राप्तेः हेतोः हस्ताक्षरं कुरू। (धर्नसिंहः हस्ताक्षरं करोति प्रस्थातुमभिलषति च) उपविशतु भवानेव क्षणं यावत्। (इति कथयित्वा प्रकाशचन्द्रः प्रस्थानात्तं विरमयति।)

**प्रकाशचन्द्रः**—मया भवतः निलम्बनादेशस्य प्रक्रिया पूरणीकृता परमियदेव न सर्वम्। भवन्निग्रहणात् भयभीतोऽस्मि। असौ सत्यव्रतः भवतः उत्कोच विवादं न्यायालये पञ्जीकृत्य निग्रहणस्यादेशमप्यावश्यमेव कारयिष्यतीति।

धर्नसिंहः—(विच्छायवदनो वदति ।) अधुना किं करोमि ? सेवाऽपि सुरक्षिता न स्थास्यति इति प्रतिभाति मे ।

(पुनरुत्थाय व्याकुलचित्तो हतप्रभश्च गृहं प्रति गच्छति गत्वा च तूष्णीमेव उपविशति । पृष्टः सन् भार्यां सर्वं वृतान्तं कथयति ।)

— — —

(निलम्बितेन धर्नसिंहेन मासद्वयकालः किमपि न कुर्वन् अतिवाहितः । एकस्मिन् दिने यदा सः द्वाराद् बहिः उपविष्टः आसीत् तदैव द्वौ राजपुरुषौ तस्य नाम पृच्छन्तौ तत्रैवागतौ ।)

राजपुरुषौ—भवतः निग्रहणस्यादेशः । अतएव त्वमात्मानं निगृहीतमेव जानीहि आवाभ्यां सहाधुनैव गच्छेः ।

(धर्नसिंहेन सह राजपुरुषयोः वार्तालापं श्रुत्वा धर्नसिंहस्य भार्या पुत्राः, पुत्र्यः च तत्रागच्छन्ति । निगडितं धर्नसिंहं दृष्ट्वा सर्वे तूष्णीमेव तिष्ठन्ति । कनिष्ठा बाला रचना रुदती कथयति ।)

रचना—कुत्र नीयते मे पिता ? त्यजतम् पितरम्मे । (इति रुदती पितुः कञ्चुकं गृहणाति ।)

(रुदतीं बालां दृष्ट्वाऽपि राजपुरुषौ आदेशं पालयतः । धर्नसिंहमग्रे कृत्वा चलतः । धर्नसिंहस्य भार्या कमला अश्रूणि मुञ्चतीं बालां रचनामङ्के संस्थाप्य कतिचित् पदानि धर्नसिंहमनुगच्छति ।)

— — — —

(धर्नसिंहस्य प्रातिवेशिकः दयारामः यदा धर्नसिंहस्य निग्रहस्य विषये श्रृणोति तदैव सः न्यालयं गच्छति न्यायाधीशस्य कार्यालयस्य प्रधानलिपिकं पृच्छति ।)

दयारामः—अहं धर्नसिंहस्य प्रातिवेशिकः दयारामः तस्य प्रतिभूत्यर्थं याचिकां प्रस्तोतुं वाञ्छामि।

बुद्धराजः—धर्नसिंहस्य निग्रहणं भारतीय दण्डसंहितायाः धारा एकषष्टयुत्तरशत (१६१) द्विषष्ट्युत्तर शतयोः अन्तर्गतेऽभवत्। अतएव प्रतिभूत्यर्थं याचिका स्वीकृता न भविष्यति।

(तत्पश्चात् दयारामः बन्दिगृह प्रति गच्छति।)

दयारामः—(बन्दिगृहे उपविष्टं धर्नसिंहं प्रति) श्री धर्नसिंहः! नियतिः केन लङ्घ्यते? भवतः प्रतिभूत्यर्थं याचिका प्रस्तोतुं वाञ्छिता मया परं भारतीय दण्डसंहितायाः यस्यां धारायां भवतः निग्रहणमभवत् तस्यां प्रतिभूः न भवतीति ज्ञातम्।

धर्नसिंहः—(अश्रूपूर्णाभ्यां नेत्राभ्यां दयारामं विलोक्य) आम् बन्धुवर! मन्दभाग्योऽस्मि, परं किमत्र मन्दभाग्यमपि? कृतकर्मणः फलमाप्तम्मया। विधिना यल्ललाटे लिखितमस्ति तत् प्रोज्झितुं कोऽपि समर्थो नास्ति।

(ततः दयारामः नमस्कृत्य गृहं प्रत्यागच्छति।)

(पटाक्षेपो भवति)

## चतुर्थं दृश्यम्

समयः—एकादशवादनकालः। स्थानम्—न्यायालयः।

(कारागारे निक्षिप्तः एकाकी धनसिंहः स्वयमेवालपति।

"अहमेवापराधी मयास्खलितम् । सत्यव्रतेन सम्यक्कृतम्। कस्यापि दोषो नास्ति। परां काष्ठां गताऽऽसीत् उत्कोच-वृत्तिः मे। हस्तं मस्तके संस्थाप्य पुनश्चानुशयति।

"धिग्दिं दुष्कर्म कारिणम्माम्,
अजस्त्रभावेनाप्तमध्रुवं धनम्।
कस्यापि क्वचित् नात्र दोषः,
भुक्तं हि कृतकर्मणः फलम्मया॥ १॥

(धनसिंहस्य विवादे वादानुवादाय तिथिर्मासद्वयादनन्तरं निर्धारिताऽभवत् । इत्थं जनवरी मासस्य द्वितीयः दिवसः वादानुवादाय निश्चितोऽस्तीति सूचना द्वाभ्यां पक्षाभ्यां प्रेषिता।)

(अद्य जनवरी मासस्य द्वितीयः दिवसः। न्यायालये न्यायधीशः श्री सच्चिदानन्द वसिष्ठः स्वासने आसीनः। सत्यव्रतः, रामधनः, वेदप्रकाशः, अधीक्षकः प्रकाशचन्द्रः अन्ये चापि कर्मचारिणः स्वस्व स्थानेषूपविष्टाः सन्ति। धनसिंहस्य पत्नी कमला, तस्य प्रातिवेशिकश्च दयारामः विवादस्य निर्णयं श्रोतुं तत्रोपस्थितौ स्तः। धनसिंहस्य साक्षी पक्षपाती च तत्र कोऽपि नासीत्।

धर्नसिहस्तु स्वविवादस्याधिवचनाय अधिवक्ता अपि न स्थापितः । सः सत्यमेव कथयितुं वाञ्छति । सत्यव्रतेन वादिना-राजाभियोगरूपेण पञ्जीकृतोऽयं विवादः अतएव राजकीय अधिवक्ता अस्मिन् विवादेऽधिवचनं करिष्यति ।

**आह्वायकः**—सत्यव्रतादयः उपस्थिताः भ व न्तु......।

(आह्वायनं श्रुत्वा सत्यव्रतः तस्य पक्षपातिनः चोपस्थिताः भवन्ति । धर्नसिहोऽपि द्वयोः राजपुरुषयोः संरक्षणे वन्दि गृहात् न्याधीशस्य समक्षमानीतः । सोऽपि अभियुक्त योग्य स्थाने तिष्ठति ।)

— — —

**सच्चिदानन्द वसिष्ठः (न्यायाधीशः)**—(धर्नसिहस्य विवाद-पञ्जिकामवलोकयन् राजकीय-अधिवक्तारं प्रति ।) मया सम्यक् रूपेणावलोकिता पञ्जिकेयम् । अधुना प्रारभस्व प्रतिवेदनानुसारमेव साक्ष्य प्रस्तुतीकरणस्य प्रक्रियाम् ।

**सत्यजित् कुमारः (राजकीयअधिवक्ता)**—स्वामिन् ! विद्युत्कार्यालयस्य अधीक्षकः प्रकाशचन्द्रः सत्यव्रतस्य पक्षस्य प्रथमः साक्षी भवत्समक्षे स्थितः ।

**प्रकाशचन्द्रः**—(शपथं गृह्णन् गीतायां हस्तं संस्थाप्य) अहं सत्यमेव वदिष्यामि सत्यात् ऋते किमपि न कथयिष्यामि ।

**सत्यजित् कुमारः**-(प्रकाशचन्द्रं प्रति) धर्नसिहस्य रंजितकरबन्धस्य काले भवान् कुत्रासीत् किञ्च कुर्वन् आसीत् ?

**प्रकाशचन्द्रः**—अहं स्वकार्ये संलग्न आसम् परं श्रुत्वा च श्री सत्यव्रतस्याकस्मिकागमनं धर्नसिहस्य समीपेऽऽगच्छम् ।

सत्यजित् कुमारः—किं श्री सत्यव्रतः धर्नसिंहस्य उत्कोचप्रतिवेदनं भवत्समक्षे अलिखत् ? भवतः आगमनात् पूर्वमेव वा ।

प्रकाशचन्द्रः—श्रीमता सत्यव्रतेन मम समक्षे प्रतिवेदनं लिखितम् । मया धर्नसिंहस्य हस्ते त्रीणि शतानि रूप्यकाणि दृष्टानि । तदैव मम साक्ष्यमपि गृहीतम् ।

सत्यजित् कुमारः—(न्यायधीशं प्रति) स्वामिन् ! सत्यमेवोक्तं महोदयेन प्रकाशचन्द्रेण । तेषाम् आख्यानमिदमवधान-योग्यम् । स्वामिन् द्वितीयः साक्षी रामधनः यः उत्कोचरूपेण शतत्रयं रूप्यकाणां धर्नसिंहाय अयच्छत् ।

सत्यजित् कुमारः—(रामधनं प्रति) त्वया त्रीणि शतानि रूप्यकाणि दत्तानि अथवा न ? यदि दत्तानि तद् किमर्थम् ?

रामधनः—आम्, मया दत्तानि त्रीणि शतानि रूप्यकाणि धर्नसिंहाय । मम गृहे विद्युत्-प्रबन्धो नास्ति अतएव विद्युत्तारक-संयोजनस्य हेतोः मया धर्नसिंहः अनेकशः प्रार्थितः । उत्कोच लोभी धर्नसिंहः कार्यं कर्तुं स्वीकृत्यापि नाकरोत् निश्चितकालस्य स्थगनमेव करोति स्म ।

सत्यजित् कुमारः—ततश्च त्वं किमकरोः ?

रामधनः—तदा निज घनिष्ठमित्रेण वेदप्रकाशेन सह मिलित्वा योजनामेकामरचयम् । मम विचारे उत्कोच प्रदानमेव परमभ्रष्टाचरणं विद्यते परमहं भ्रष्टाचारोन्मूलनाय धन-सिंहं शिक्षयितुं सद्व्यवहारं सच्चरित्रञ्च तस्मै उत्कोचं दातुमवाञ्छम् । कोऽपि उत्कोचकमुत्कोचस्य व्याजेनैव वशीकर्तुं शक्नोति । कथ्यते च कण्टकेनैव कण्टकम् ।

सत्यजित् कुमारः – किं धर्नसिहेन त्वाम् उत्कोच रूपेण त्रीणि शतानि-रूप्यकाणि याचितः।

रामधनः—आम् श्रीमन् ! धर्नसिंह, परमोत्कोचकः संजातः। सः सरलतया उत्कोचं नायाचत्। यदाऽहं विद्युत्तारक-संयोजनाय शीघ्रतायाः हेतोः नम्रीभूय निवेदनमकरवम् यत् मम योग्या सेवा कथनीया तदैव सः उत्कोचमयाचत्।

सत्यजित् कुमारः—साधु ! साधु ! रामधनः ! त्वया गुप्तमपि स्वयमेव स्पष्टेन भणितम्। भ्रष्टाचारस्योन्मूलनाय केवल मेवमाचरत् भवान्। भवद्विचारस्तु शोभन आसीत्। भवत्कथनेन सर्वमेव स्पष्टं जातम्। अन्य प्रश्नानां पृच्छा नावश्यकी।

(न्यायाधीशं प्रति) स्वामिन् ! उत्कोच प्रदानस्य रामधनेन कथितंमूलकारणमिदमभिलेखनीयमस्ति।

सच्चिदानन्द वसिष्ठः—(प्रतिवादिनं धर्नसिंहं प्रति) किं भवता स्वविवादेऽधिवचनाय कोऽधिवक्ता नियुक्तः ? किमयं विवादः तवोपरि मिथ्याऽऽरोपितः ?

धर्नसिंहः (गीतायां हस्तं संस्थाप्य शपथं च गृहीत्वा)स्वामिन् ! मया कोऽपि अधिवक्ता न नियुक्तः। न चेदमभ्याख्यानं ममोपरि। सत्यं सत्यमेव सर्वम्। अतोऽधिवक्तुः आवश्यककता न भवति। असत्यमेव सत्यं तद्विपरीतं साधयितु भवतः अधिवक्ताधिवचनञ्च।

सच्चिदानन्द वसिष्ठः—(सत्यजित् कुमारं प्रत्रि) प्रतिवादिनः कथनेन जातविश्वासस्नेहो चाहं विवादे प्राप्तप्रमाणानां सत्या-

पनाय काञ्चित् प्रश्नान् प्रष्टुं श्री सत्यजित् कुमारमेवाव-चिनोमि ।

सत्यजित् कुमारः—यथादिशन्ति स्वामिनः (आदेशं पालयन् धर्नासहं प्रति) किं रामधनात् भवता उत्कोचः गृहीतः ?

धर्नासहः—आम्, श्रीमन् !

सत्यजित् कुमारः—किं भवान् पूर्वमपि कस्माच्चित्मउत्कोचम ग्रहीत् ?

धर्नासह—आभ्, श्रीमन् ! न तु केवलं सकृदेव प्रत्युत अनेकशः ।

सत्यजित् कुमारः—भवता उत्कोच ग्रहणस्य प्रेरणा कथं कुतश्च प्राप्ता ?

धर्नासहः—वस्तुतः प्ररणयैवाहमुत्कोच गृहीतुं प्रारभे । पूर्वं मां उत्कोच लोलुपं न दृष्ट्वा मह्यं ईर्ष्यन्तिस्म सहकर्मिणः । मृतपिण्ड मतिरिति कथयित्वा मामुपहसन्ति स्म । परं किञ्चित्कालानन्तरमेव परस्पर मेलनेन सहयोगेन च स्वकीयं नैतिक मूल्यं सच्चरित्रताञ्च विस्मृत्य तेषां मार्गस्य पथिककोऽहमपि जातः । यथा देशस्तथा वेशः सार्थकोऽभवत् ।

सत्यजित् मारः—ततश्च, भवान् ईदृशः परमोत्कोचकः कथमभवत् ?

धर्नासहः—उत्कोच प्राप्त्या मे धन-लोलुपतायाः वृद्धिः जाता तथा धनागमनेन सह आवश्यकतानामपि वृद्धिभूता । तत्पश्चात मया भृशमुत्कोचो गृहीतः । उत्कोच समर्थयितुः कुतर्कोऽपि माम् अस्मिन् पाप कर्मणि प्रावीवृतत् । अधुना त्वहं मन्ये उत्कोचादान-प्रदान काले न ईश्वरः किन्तु लोभ राक्षस एव हृदये वसति । ईश्वर प्रदत्तवस्तु नास्त्युत्कोचः किन्तु

स पापकर्म । अतएव तस्यादानं प्रदानञ्च तथा भवति यथान्यो न पश्येत् महत् पापमिदं मया कुतर्क प्रेरितेन कृतम् ।

सत्यजित् कुमारः—अद्याकस्मात् एवं विधं परिवर्तनं कथं संजातम् ?

धर्नसिंह—वस्तुतः एवं विधं परिवर्तनं न केवलमाकस्मिकमपितु विस्मयकारकमप्यस्ति । अनेन वन्धेन सर्वप्रथमम्मयाऽपि सत्यव्रताय द्रोहितः परम् उत्कोच प्राप्त धनस्य किञ्चिदपि सदुपयोगं न दृष्ट्वाध्रुवतां मत्वा च मे मनसि महती ग्लानिः उत्पन्नाः अतएव मया तु दृष्टं यत् श्री सत्यव्रतेन सर्वमेवोचितं कृतम् । तेन तु लोभान्धं चक्षुः ज्ञानञ्जन शलाकया उन्मीलितम् । अतः सः मम गुरुः शत्रुर्न । सन्मार्गस्य निर्देशनं कृत्वा मया सह मित्रवत् आचरत् ।

तस्य विषये मम विचारस्तु ।

"उद्धृतोऽहं पतनात् घोर नरके,
नास्ति वन्धोऽयं प्रत्युत मोक्षो मे ।
पापान्निवार्य विनियोज्य च पुण्यमार्गं,
हितमेव कृतम्मे हानिर्न काचित् ॥

सत्यजित कुमारः—धर्नसिंह ! त्वया सत्यमेव कथितम् । शुद्ध हृदयेन स्वकीय अपराधः स्वीकृतः । सत्यं वदित्वा प्रमाण सत्यापनस्य कार्यं सरलमकरोत् । विरलाः सन्ति एतादृशाः जनाः अन्यथाऽद्यत्वे अपराधिनः अपराधं न स्वीकुर्वन्ति ।

(न्यायाधीशं प्रति) स्वामिन् ! भवत्समक्षे प्रष्टव्याः प्रश्नाः मया पृष्टाः । धनसिंहः कुसंगत्या कुमार्ग-सेवनमकरोत् । इयं तस्य मूल प्रकृतिः न आसीत् । तस्य सत्यकथनमपराध स्वीकतिञ्च प्रति भवतो विशेष रूपेण ध्यानाकर्षणं करोमि यत् धनसिहस्य विबादे सहानुभूति पूर्ण विचारः परमापेक्षणीयः ।

**सच्चिदानन्द वसिष्ठः**—धनसिंहस्य विवादे अद्यतनी न्यायालयस्य कार्यवाही समाप्यते । निर्णयस्य घोषणा श्वः एव भविष्यति ।······

(द्वितीयेऽहनि न्यायाधीशः सच्चिदानन्द वसिष्ठः आसने आसीत् । सर्वे निर्णयं श्रोतुमागताः आसन् । धनसिंहोऽपि हर्षविषादरहितः स्वस्थाने स्थितोऽस्ति । सत्यजित कुमारस्य वादानुवादेन सर्वे विश्वस्ताः आसन् यत निर्णयो धन सिंहस्य पक्षे भविष्यति । तथापि सन्देहः कुत्र न भवति ? तेषां विच्छाय वदनानि हृदयस्थित भावान् प्रदर्शयितुं निर्मल दर्पणः इव प्रतीयन्ते ।)

**सच्चिदानन्द वसिष्ठः**—न्यायालयः धनसिंहस्य विवादे कृतवादानुवादं ध्यानेनाश्रृणोत् निर्णयञ्चाग्रहीत् यत् धनसिंहः सत्यमाश्रित्यैव स्वकृतापराधं स्वीकृतवान् । सः कुसंगत्या कुमार्गगामी अभवत् न तु प्रकृत्या । तस्याख्यानानुसारेण सः मनसा वाचा, कर्मणा चैकरूपतां गतः । तस्य मनसि उत्कोचं प्रति आत्मग्लानिः उत्पन्नाऽस्ति । अतएव तस्य विवादे सहानुभूतिपूर्वक-विचारं कुर्वन् न्यायालयः निर्णीतवान् यत् न्यायालयः—"धनसिंहाय कारावासात् मुक्ति

प्रददाति । सेवायां पुनर्नियुक्तेः हेतोः निलम्बनादेशं निरस्यति । परमुत्कोच ग्रहणं भारतीय दण्ड संहितायां भ्रष्टाचरणमिति स्वीकृत्य धनसिंह सहस्त्रं रूप्यकाणि दण्डयति ।" इति निर्णयः ।

(निर्णय श्रवणानन्तरमेव सर्वे जनाः अभिलषितफल प्राप्त्या प्रसन्न चित्ताः आसन् । कोऽपि विषाद ग्रस्तः विच्छाय वदनो वा नासीत् । द्वावपि पक्षौ निर्णयेन तुष्टौ आस्ताम् ।)

सत्यव्रतः—(कथनस्यादेशं गृहीत्वा) न्यायाधीश महोदयाः धन्यवाद भाजनानि । सच्चिदानन्द महोदयः निष्पक्ष भावेन निर्लोभ चित्तेन च निर्णयमकरोत् । श्रीमता सफलीकृता मे योजना ।

धनसिंहः –(सत्यव्रतं प्रति) "श्री सत्यव्रत महोदयः मां रञ्जितकरं बद्ध्वा बन्धं कारयित्वा च महदुपकरोत् । मम जीवनोद्धारे श्री रामधनस्य भूमिका विशिष्टाऽऽसीत् । श्रीराम धनस्य योजनायाः क्रियान्वयने श्री सत्यव्रतस्य प्रयत्नः श्लाघ्यः । किमधिकेन सः मम शेषजीवनं नाशात् अरक्षत् ।"

(न्यायाधीशं प्रति)

न्यायालयः सत्याश्रितमेव निर्णयं दत्वा मे पूर्वनष्ट जीवनमपि उद्धृतवान् । अद्यैव मया ज्ञातं यत् सत्यमेव जयते नानृतम् । भवद्भ्यां कृतोपकारः न विस्मरणीयः जीवन पर्यन्तम् । किं कथयित्वा भवतोः अभिनन्दनं करवाणि ? तथापि इमानि मे वचनानि ।......

"दिष्ट्यावतरितः सत्यव्रतो देवपुरुषः,
ररक्ष जीवनम्मे परार्धं नाशात् ।
पूर्वार्धं नष्टस्यापनीय खेदम्,
पुनर्जीवितः भगवत्कृपया महीयस्या ॥

(तत्पश्चात् जयतु जयतु सच्चिदानन्द महोदयस्य-सत्यमेव जयते चेति वारं वारं कथयन्तः हर्षिताः-सर्वे निष्क्रान्ता । धनसिंहस्य भार्या कमला, सहस्त्रं रुप्यकाणि तत्कालमेव संचित्य स्वपतिं मोचयति । धनसिंहः, कमला, प्रातिवेशिकः दयारामः, धन सिंहस्य पुत्राश्च गृहं प्रत्यागच्छन्ति ।)

(पटाक्षेपो भवति ।)